कुमाराः 'सहैव राजवाहनेन राजहंसं प्रणंस्यामो न चेत्प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्य राजवाहनमन्वेष्टुं पृथक्प्रस्थिताः। एतं भवद्वृत्तान्तं ततः प्रत्यावृत्तानां सैनिकानां मुखादाकर्ण्यासह्यदुःखोदन्वति मग्नमनसावुभावहं युष्मज्जननी च 'वामदेवाश्रमं गत्वैतद्वृत्तान्तं तद्विदितं विधाय प्राणपरित्यागं कुर्वः' इति निश्चित्य तदाश्रममुपगतौ तं मुनिं प्रणम्य यावत्स्थितौ तावदेव तेन त्रिकालवेदिना मुनिना विदितमेवास्मन्मनीषितम्। निश्चयमवबुध्य प्रावाचि—'राजन्, प्रथममेवैतत्सर्वं युष्मन्मनीषितं विज्ञानबलादज्ञायि। यदेत त्वत्कुमारा राजवाहननिमित्ते कियन्तमनेहसमापदमासाद्य भाग्योदयादसाधारणेन विक्रमेण विहितदिग्विजयाः प्रभूतानि राज्यान्युपलभ्य षोडशाब्दान्ते विजयिनं राजवाहनं पुरस्कृत्य प्रत्येत्य तव वसुमत्याश्च पादानभिवाद्य भवदाज्ञाविधायिनो भविष्यन्ति। अतस्तन्निमित्तं किमपि साहसं न विधेयम्' इति। तदाकर्ण्य तत्प्रत्याद्धैर्यमवलम्ब्याद्यप्रभृत्यहं देवी च प्राणमधारयाव। इदानीमासन्नवर्तिन्यवधौ वामदेवाश्रमे गत्वा विज्ञप्तिः कृता—'स्वामिन्, त्वदुक्तावधिः पूर्णप्रायो भवति तत्प्रवृत्तिस्त्वयाद्यापि विज्ञायते' इति। श्रुत्वा मुनिरवदत्—'राजन्, राजवाहनप्रमुखाः सर्वेऽपि कुमारा अनेकान्दुर्जयाञ्शत्रून्विजित्य दिग्विजयं विधाय भूवलयं वशीकृत्य चम्पायामेकत्र स्थिताः। तवाज्ञापत्रमादाय तदानयनाय प्रेष्यन्तां शीघ्रमेव सेवकाः' इति मुनिवचनमाकर्ण्य भवदाकारणायाज्ञापत्रं प्रेषितमस्ति। अतःपरं चेत्क्षणमपि यूयं विलम्बं विधास्यथ ततो मां वसुमतीं च मातरं कथावशेषावेव श्रोष्यथेति ज्ञात्वा पानीयमपि पथि भूत्वा पेयम्' इति। एवं पितुराज्ञापत्रं मूर्ध्नि विधृत्य गच्छेमेति निश्चयं चक्रुः। अथ वशीकृतराज्यरक्षापर्याप्तानि सैन्यानि समर्थतरान्पुरुषानाप्तान्स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां

---

इत्यव्ययीभावः। स्कन्धावारं सैन्यनिवहम्। अनुपलभ्य न दृष्ट्वा। परावर्त्य निवर्त्य। पृथक् प्रत्येकतः। दुःखोदन्वति विषादसागरे। 'उदन्वानुदधिः सिन्धुः' इत्यमरः। युष्माकं जननी वसुमती। तद्विदितं वामदेवमहर्षिणा ज्ञातम्। तं मुनिं वामदेवम्। त्रिकालवेदिना भूतभविष्यद्वर्तमानज्ञानवता। विदितं ज्ञातम्। अस्माकं मनीषितं वाञ्छितम्। निश्चयं प्राणपरित्यागविषये इत्यर्थः। विज्ञानबलाद्योगबलात्। अज्ञाय्यवगतम्। अनेहसं कालम्। आसाद्य प्राप्य। विक्रमेण प्रतापेन। प्रभूतानि बहूनि। उपलभ्य स्वाधीनं विधाय। प्रत्येत्य पुनरागत्य। आज्ञाविधायिनः आज्ञाकारिणः। किमपि साहसं प्राणत्यागरूपं कर्म। तस्य वामदेवस्य प्रत्ययात् यथार्थभाष्यमीति विश्वासात्। आसन्नवर्तिनि समीपस्थिते अवधौ षोडशाब्दरूपमर्यादायाम्। विज्ञप्तिर्निवेदना। तत्प्रवृत्तिः तेषां कुमाराणां वृत्तान्तः आकारणायाह्वानाय। विलम्बं कालातिवाहनम्। कथावशेषौ मृताविति यावत्। पानीयं जलमपि। प्रस्थानानन्तरमेवेति भावः। मूर्ध्नि [illegible]।

विधाय पूर्ववारणं मालवेशं मानसारं पराजित्य तदपि राज्यं वशीकृत्य पुष्पपुरे राज्ञो राजहंसस्य देव्या वसुमत्याश्च पादान्नमस्यामः । एवं निश्चित्य स्वस्वभार्यासंयुताः परिमितेन सैन्येन मालवेशं प्रति प्रस्थिताः । प्राप्य चोज्जयिनीं तदैव सहायभूतैस्तैः कुमारैः परिमितेन राजवाहनेनातिबलवानपि मालवेशो मानसारः क्षणेन पराजिग्ये निहतश्च । ततस्तदुहितरमवन्तिसुन्दरीं समादाय चण्डवर्मणा तन्मंत्रिणा पूर्वं कारागृहे रक्षितं पुष्पोद्भवं कुमारं सकुटुम्बं तत उन्मोचितं सह नीत्वा मालवेन्द्रराज्यं वशीकृत्य तद्रक्षणाय कांश्चित्सैन्यसहितान्मंत्रिणो नियुज्यावशिष्टपरिमितसैन्यसहितास्ते कुमाराः पुष्पपुरं समेत्य राजवाहनं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणानभिवन्दितवन्तः । तौ च पुत्रसमागमं प्राप्य परमानन्दमधिगतौ । ततो राज्ञो वसुमत्याश्च देव्याः समक्षं वामदेवो राजवाहनप्रमुखानां दशानामपि कुमाराणामभिलाषं विज्ञाय तानाज्ञापयत्— 'भवन्तः सर्वेऽप्येकवारं गत्वा स्वानि स्वानि राज्यानि न्यायेन परिपालयन्तु । पुनर्यदेच्छा भवति तदा पित्रोश्चरणाभिवन्दनायागन्तव्यम्' इति । ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरस्याधाय तं प्रणम्य पितरौ च, गत्वा दिग्विजयं विधाय प्रत्यागमनान्तं स्वस्ववृत्तं पृथक्पृथङ्मुनिसमक्षं न्यवेदयन् । पितरौ च कुमाराणां निजपराक्रमावबोधकान्यतिदुर्घटानि चरितान्याकर्ण्य परमानन्दमाप्नुताम् । ततो राजा मुनिं सविनयं व्यजिज्ञपत्—'भगवन्, तव प्रसादादस्माभिर्मनुजमनोरथाधिकमवाङ्मनसगोचरं सुखमधिगतम् । अतःपरं मम स्वामिचरणसंनिधौ वानप्रस्थाश्रममधिगत्यात्मसाधनमेव विधातुमुचितम् । अतः पुष्पपुरराज्ये मानसारराज्ये च राजवाहनमभिषिच्यावशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथोचितं सम्प्रदाय ते कुमारा राजवाहनाज्ञाविधायिनस्तदेकमत्या वर्तमानाश्चतुरुदधिमेखलां वसुंधरां समुद्धृत्य कण्टकानुपभुञ्जन्ति तथा विधेयं स्वामिना' इति । तेषां तात्पितुर्वानप्रस्थाश्रमग्रहणोपक्रमानिषेधे भूयांसमाग्रहं विलोक्य मुनिस्तानवदत्—'भोः कुमारकाः, अयं युष्मज्जनक एतद्वयःसमुचिते पथि वर्त-

---

अथेति । पितुः पत्रदर्शनानन्तरम् । नमस्यामः नमस्कुर्मः । पराजिग्ये पराजितः । 'सँल्लिटोर्जेः' इति कुत्वम् । अभिवन्दितवन्तः प्राणंसिषुः । तौ च वसुमतीराजहंसौ । अभिलाषं मनीषितम् । एकवारं सकृत् । आप्नुतां प्राप्तवन्तौ । वाक्च मनश्च वाङ्मनसे । 'अचतुरविचतुर--' इत्यादिना निपातितः । तयोर्गोचरं न भवतीत्येवंरूपम् । अधिगतमासादितम् । आत्मसाधनं परमात्मचिन्तनम् । यथोचितं येन येन यद्यदासादितं तत्तस्मै इति रीत्या । कण्टकाञ्छत्रून् समुद्धृत्योन्मूल्य । विधेयं संपादनीयम् । तेषां राजवाहनादीनाम् । भूयांसमतिमहान्तम् । एतद्वयसः वार्धक्यस्य

मानः कायक्लेशं विनैव मदाश्रमस्थो वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयः। अत्र स्थितस्त्वयं भगवद्भक्तिमुपलप्स्यते। भवन्तश्च पितृसंनिधौ न सुखमवाप्स्यन्ति' इति। महर्षेराज्ञामधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहमत्यजन्। राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपं गतागतमकुर्वन्। एवमवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमारा राजवाहनाज्ञया सर्वमपि वसुधावलयं न्यायेन परिपालयन्तः परस्परमैकमत्येन वर्तमानाः पुरंदरप्रभृतिभिरप्यतिदुर्लभानि राज्यसुखान्यन्वभूवन्॥

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कथोपसंहारः।

---

इति श्रीमहामहोपाध्यायकविकुलसार्वभौमनिखिलविद्याकुमुदिनीशर्वरीश्वरसरस्वतीनिःश्वसितकविदण्डिपण्डितविरचितं दशकुमारचरितं संपूर्णम्॥

---

समुचिते योग्ये। कायक्लेशं शरीरायासम्। पितृसंनिधौ तत्समक्षम्। तत्र संकोचादिति भावः। वसुधावलयं भूमण्डलम्। न्यायेन मन्वादिप्रणीतराजनीत्यनुसारेण। एकाऽविभिन्ना मतिर्येषां ते एकमतयस्तेषां भावेन। पुरन्दरप्रभृतिभिरिन्द्रादिभिरपि। अन्वभूवन्ननुभवन्ति स्म॥

इति श्रीदण्डिनः कृतेर्दशकुमारचरितस्य श्रीयुतकाशीवास्तव्यकण्वशाखीयपण्डितपौराणिकोपाख्य-पाण्डुरङ्गाचार्यात्मजेन काशीस्थराजकीयप्रधानसंस्कृतपाठशालातो लब्धव्याकरणाचार्य-पौराचार्यपदवीकेन कृष्णशास्त्रिणा विरचिता कथोपसंहारव्याख्या मनोरमाख्या संपूर्णा॥

---

शुभमस्तु